| विषयः (Subject) | संस्कृतम् (Sanskrit) |
|---|---|
| पत्रसंख्या (Paper Number) | 1 |
| पत्रविषयः (Title) | वैदिकभाषा तथा वाङ्मयं च<br>(Vedic Language & Literature ) |
| पाठ्यांशसंख्या पाठ्यांशनाम च<br>(Module Number& Module Name) | 37, शिक्षावेदाङ्गस्य परिचयः<br>(Intoduction to Shiksha Vedanga) |
| पाठ्यांशतत्त्वानि<br>(Focal Points of The Module) | • वेदाङ्गेषु शिक्षामाहात्म्यम्<br>• शिक्षाग्रन्थाः पाणिनीयशिक्षा च |
| प्रमुखान्वेषकः<br>(Principal Investigator) | सह-प्रमुखान्वेषकः<br>(Co-Principal Investigator) |
| प्रो.रमेशकुमारपाण्डेयः,<br>कुलपतिः, श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठम्,<br>नवदेहली 110016 | प्रो.वे.कुटुम्बशास्त्री,<br>पूर्वकुलपतिः,राष्ट्रियसंस्कृतसंस्थानम्,नवदेहली<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,वाराणसी<br>सोमनाथसंस्कृतविश्वविद्यालयः, गुजरातः |

| समन्वयकः<br>(Co-ordinator) | पाठ्यांशलेखकः<br>(Content Writer) | समीक्षकः<br>(Reviewer) |
|---|---|---|
| प्रो.हरिहरत्रिवेदी,<br>आचार्यः, पौरोहित्यविभागस्य,<br>श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठम्,<br>नवदेहली 110016 | डॉ. हरिराममिश्रः<br>सहाचार्यः,<br>विशिष्टसंस्कृत-अध्ययनकेन्द्रम्,<br>जवाहरलालनेहरुविश्वविद्यालयः,<br>नवदेहली | प्रो. पी.एन्.शास्त्री,<br>कुलपतिः,<br>राष्ट्रियसंस्कृतसंस्थानम्<br>नवदेहली |
| पाठ्यांशसंलग्नकम्<br>(Module Tag) | SAN_P1_M37 | |

| आयोजकसंस्था (Anchor Institute) |
|---|
| श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली 110016 |

विषयसूची –

1. प्रस्तावना -

मानवैतिह्ये वेदानामाविर्भावः सर्वातिशायिनी महत्त्वपूर्णा च घटना। साक्षात्कृतधर्मभिः ऋषिभिः न मन्त्राः कृताः अपितु दृष्टाः। मन्त्रदर्शनमेव ऋषित्वस्य मूलम्। "सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्" इत्यादिमन्त्राणां साक्षात्कारे त एव समर्था आसन् येषाम् अन्तःप्रज्ञा उद्बुद्धाऽऽसीत्। यास्केनाभाणि च **साक्षात्कृतधर्माणः ऋषयो बभूवुस्तेऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः**। किन्तु नृणां शक्तिवैकल्याद् वेदार्थावबोधः सर्वैरप्यशक्यो जात आसीत् पुराऽपि। अत एव कौत्सादिभिर्मन्त्राणामानर्थक्यमप्युररीकृतम्, इति तथ्यमप्यवाप्यते - **अनर्थकाः मन्त्राः इति कौत्सः** । अथ च वेदार्थज्ञानाय तेभ्य ऋषिभ्य एव वेदाङ्गान्यप्याविर्भावितानि - **उपदेशाय ग्लायन्तोऽवरेभ्यो बिल्मग्रहणायेमं ग्रन्थं समाम्नाषुर्वेदञ्च वेदाङ्गानि च** ।

अङ्ग्यन्ते ज्ञायन्ते स्वरूपाणि एभिस्तान्यङ्गानि वेदस्यार्थाद् वेदाङ्गानि। अङ्गानामपि यद्यपि वेदवदनादित्वं स्वीक्रियते तस्मादेव उपनिषत्स्वपि वेदैः सह समाम्नातानि षट्सङ्ख्याकानि वेदाङ्गानि समुल्लिखितान्यवाप्यन्ते - **तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। तथाऽपि सङ्क्षेपविस्तरविवक्षया ताँस्तान् यास्कादीनाचार्याँस्तत्तदङ्गानां कर्तॄनाचक्षते** । एतेषामङ्गानां मानवाङ्गनिदर्शनद्वाराऽपि समुल्लेखोऽक्रियत - **छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनञ्चक्षुर्निरुक्तं श्रोत्रमुच्यते। शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥** अङ्गैः सहितस्यैव वेदस्याध्ययनेन चरमफललाभ इत्युक्तं महाभाष्येऽपि - **ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति** ।

2. वेदाङ्गानां महत्त्वम् -

शिक्षावेदाङ्गस्य माहात्म्यज्ञानाय अन्येषां वेदाङ्गानामपि प्राशस्त्यसमनुष्ठानम् आपाततः आवश्यकमेव। तथा हि षट्सु वेदाङ्गेषु कल्पवेदाङ्गं हि वेदविहितविधिसम्पादनपरं प्रोच्यते। वेदमन्त्रेषु सत्सु यागे विनियोगः कथं स्यादित्युदाहरणभूतं कल्पसूत्रप्रयोजनं सायणाचार्येण तावदेवं विनिरदेशि - **विशेषविनियोगांश्च मन्त्रविशेषाणां श्रुतिलिङ्गवाक्यादि-प्रमाणान्युपजीव्याश्वलायनो दर्शयति।** (ऋग्वेदभाष्यभूमिका) वस्तुतो वेदाङ्गघटकस्य कल्पस्य मुख्यो विषयो यज्ञ एव। यथोक्तं काव्यमीमांसायां द्वितीयेऽध्याये **नानाशाखाऽधीतानां मन्त्राणां विनियोजकं सूत्रं**

कल्पः। सा च यजुर्विद्या,), **शुल्बं ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ** (उणादिसूत्रम् ४/५३५, तत्त्वबोधिनीव्याख्या)

व्याकरणवेदाङ्गं भाषाविश्लेषणपराणां नियमानामालोके प्रकृति-प्रत्यय-सन्धि-समासादीनां स्वरूपं निरूपयच्छब्दान्वाख्यानपुरःसरं शब्दानुस्यूतम् असन्दिग्धम् अर्थं प्रकटीकृत्य वेदं रक्षति। निरुक्ताख्यस्य वेदाङ्गस्य तावत् सामान्यं **निर्वचनं निरुक्तं** लक्षणमिदम् । अस्य विषयवस्तु व्याकरणतो बहुसमीपं प्रतीयते परं सूक्ष्मदृष्ट्या नेदं तथा। यथोक्तं स्वयं निरुक्तकारेण - **तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकञ्च,** इति। वस्तुतो व्याकरणम् अर्थनिर्देशं विदधदपि शब्दतत्त्वप्रधानम्, निरुक्तञ्चेदं वेदप्रयुक्तानां विशिष्टानां शब्दानामर्थनिर्वचनं स्यात् कीदृग्भूतमिति विनिश्चितीकरोति। तस्माच्च वेदाङ्गमिदं प्रधानतो वेदोपकारकत्वमावहति। छन्दोवेदाङ्गं हि समग्रं वेदवचनं वर्णमात्रानिकषतयाऽऽच्छाद्य सङ्गृह्णाति, तद्वचनानि च विशिष्टे स्वरूपे सन्निवेशयति। ज्योतिषशब्दो **ग्रहगणितञ्ज्योतिषम्** इति वचनप्रामाण्येन च ग्रहादिगणनपरञ्ज्योतिषं वेदाङ्गशास्त्रमिति प्रथिततरमेव। यागसम्बद्धं कालतत्त्वप्रख्यापकं ज्योतिषमिति वस्तुस्थितिरस्य वेदाङ्गस्य।

शिक्षावेदाङ्गे तु शब्दस्वरूपस्य निश्चायकाः वर्णादिविषया विविच्यन्त इत्येतद्वेदाङ्ग-शास्त्रतत्त्वोल्लेखस्तैत्तिरीयोपनिषद्युपलभ्यते। तथा हि - **ॐ शीक्षां व्याख्यास्यामः। वर्णः स्वरः मात्रा बलं साम सन्तानः इत्युक्तः शीक्षाऽध्यायः।** (तैत्तिरीयोपनिषद् १/१) शिक्षणार्थकाच्छिक्षधातोः **गुरोश्च हलः** इत्यनेन सूत्रेणाङ्प्रत्यये सति स्त्रीत्वे द्योत्ये **अजाद्यतष्टाप्** सूत्रेणैतेन टापि ततः स्वाद्युत्पत्तौ च शिक्षापदस्यास्यैव व्याकरणप्रक्रियातः सिद्धेः, अत्र शीक्षेत्युल्लेख आर्षत्वादेव कल्पनीयः। अत्रावधेयं यद् वर्णेन स्वरव्यञ्जनरूपाक्षराणाम्, स्वरेणोदात्तानुदात्तस्वरितरूपस्वराघातानाम्, मात्रया ह्रस्वदीर्घप्लुताख्योच्चारणकालानाम्, बलेनोच्चारणस्थानतदर्थप्रयत्नरूपकारकाणाम्, साम्ना दोषरहितगुणसहितोच्चारणरूपकौशलानाम्, सन्तानेन च सन्धिनियमैः सह वर्णोच्चारणरूपविशिष्टसंहिताऽऽदिपाठानां ग्रहणं भवतीति। साररूपेण **स्वरवर्णाद्युच्चारणप्रकारो यत्र शिक्ष्यते उपदिश्यते सा शिक्षा** इति सायणाचार्यवचः प्रमाणम् । यद्यपि शक्तुं शक्तो वा भवितुमिच्छा इति व्युत्पत्तिं शिक्षाशब्दस्य सन्-प्रत्यये सति निष्पादयितुं शक्यते, अथ च शिक्षयति या सा शिक्षा इत्यपि व्युत्पत्तिः सर्वविद्यार्थत्वं निष्पादयति परं शिक्ष्यते अनया सा शिक्षा इयमेव व्युत्पत्तिः शिक्षावेदाङ्गार्थं प्रतिपादयति । महाभाष्यकृता च विविधश्रुतिवचोरूपप्रामाण्यैरन्विते स्वीयग्रन्थे स्वरप्रधानस्य शिक्षाऽऽख्यवेदाङ्गस्य श्रुतिमूलत्वम् - **दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न**

**तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥** इत्येतेन वचसा साधितं यत्र मन्त्रोच्चारणे स्वरविभेदेनार्थपरिवर्तनं भवति तेन महाननर्थः, अतः शिक्षाया अतीव महत्त्वं वर्तते। एवं प्रसिद्धेष्वेतेषु षट्सु वेदाङ्गेषु चत्वार्यङ्गानि – शिक्षाव्याकरणनिरुक्तछन्दोरूपाणि शब्दार्थोभयस्वरूपात्मकस्य वेदस्य भाषायाः साक्षाद्विश्लेषणपराणि सन्तीति निःसंशयं वक्तुं शक्यते।

### 3. प्रातिशाख्यं शिक्षावेदाङ्गञ्च -

शाखृधातोः शाखां शाखां प्रतिशाखम्, प्रतिशाखं भवं प्रातिशाख्यम् इति व्युत्पत्त्या च निष्पन्नः प्रातिशाख्यशब्दो वेदानां शाखाभिः स्वसम्बद्धतां परिपोषयति। प्रातिशाख्यान्तर्गतो विवेच्यो विषयो व्याकरणवेदाङ्गेन सहाधिकः सन्निकटः प्रतीयते। यथोक्तम् - **शिक्षागणोपदिष्टं तु कार्यं नाम सङ्गृहीतम्, व्याकरणप्रधानत्वात् प्रातिशाख्यस्य** (वैदिकाभरणम् २४/५), तथा च **अस्य शास्त्रस्य मूलभूतं व्याकरणं पूर्वशास्त्रमित्युच्यते** (वैदिकाभरणम् 19/5), अपरत्र प्रसिद्धिरियमपि यत् प्रातिशाख्यग्रन्था व्याकरणशिक्षयोः सन्निविष्टं रूपं समुद्घाटयन्ति। तस्मादेव उवटेन प्रातिशाख्यस्य सञ्ज्ञा वृद्धमिति सम्भाविता। वस्तुतश्शिक्षयैव प्रातिशाख्यानामपि जायते ग्रहणम्। यद्यपि प्रातिशाख्यानां स्वरूपम्, स्वरवर्णोच्चारणादिनैकतत्त्वमादाय व्याकरणशिक्षयोर्द्वयोर्वेदाङ्गयोः समेकितमुच्यते तथाऽपि व्याकरणस्याद्यरूपमपीदं शिक्षाया एव विशदकत्वादेतद् वेदाङ्गत्वेनैव सुनिश्चीयते। वीरमित्रोदयस्य परिभाषाप्रकाशे पाणिनीयशिक्षायाः परिचयप्रदाने तावच्छिक्षयैव प्रातिशाख्यानां भवति ग्रहणमिति वर्ण्यते। यथोक्तं तत्र - **तत्र शिक्षा अथ शिक्षाम् प्रवक्ष्यामीत्यादिपञ्चखण्डात्मिका पाणिनिप्रोक्ता, प्रतिशाखं चान्याऽन्या तत्तन्मुनिप्रणीता प्रातिशाख्याभिधा च।** एवं शिक्षासु त एव विषया वर्ण्यन्ते ये हि प्रातिशाख्येष्विति स्पष्टीभवति। तस्मादेव - **तत्र वर्णानां स्थानकरणप्रयत्नादिभिर्निष्पत्तेर्निर्णयिनी शिक्षाऽऽपिशलीयादिका** इति वचनं सङ्गच्छते।

### 4. वेदानुसारिण्यः शिक्षाः -

यथा हि वेदानां शाखाऽनुसारेण प्रातिशाख्यग्रन्थानां सत्ता तथैव प्रतिवेदं शिक्षाया अपि सरणिर्दृष्टिपथमायाति। वेदानुसारिणीनां शिक्षाणां किं स्वरूपम्, काश्च ताः शिक्षाः, इत्ययं विषयोऽत्र चतुर्वेदानुसारेण सङ्क्षिप्य विविच्यते।

### *4.1 ऋग्वेदसम्बद्धाः शिक्षाः –*

***स्वराङ्कुशा शिक्षा*** - शिक्षाया अस्याः प्रणेतृविषयः सन्दिग्धः। श्रीमल्लशर्म्मणा हि **रावणेन स्वराङ्कुशे** इत्यादिवचसा कश्चिद् रावणो ग्रन्थकर्तृरूपेणोच्यते परं स्वयम् एतच्छिक्षावचसा जयन्तस्वामिप्रोक्तत्वम् अस्याः सरलतयाऽनुमीयते। तथोक्तम् -
**जयन्तस्वामिना प्रोक्ताः श्लोकानामेकविंशतिः। स्वराङ्कुशेति विख्याता बह्वृचां स्वरसिद्धये॥** एवं बह्वृचामर्थाद् ऋग्वेदस्य शिक्षेयं वस्तुतः सर्वश्लोकान् समेत्य पञ्चविंशतिकारिकाभिः समन्विता। तस्मात् पश्चात्कालिको योगश्चतुर्णां श्लोकानामिति सम्भाव्यते। मङ्गलाचरणानुसारेण स्वरनिर्णयाख्या शिक्षेयं पश्चात् स्वराङ्कुशाऽऽख्ययैव प्रसिद्धिमगमद् इति प्रतीयते। स्वरितभेदानाम्, कम्पस्वराणाम्, नादादिस्वराणाञ्च नियमनवशात् स्वराङ्कुशेत्याख्या शिक्षायाः अस्याः अन्वर्थतां प्रत्येति।

***शैशिरीयशिक्षा*** - ऋग्वेदस्य शैशिरीयशाखातः सम्बद्धा शिक्षेयम्, यस्याः प्रणेता कश्चिच्छैशिराख्य आचार्यो बभूव इत्येतच्छिक्षावचसैव स्पष्टीभवति- **शैशिरस्य तु शिष्यस्य शाकटायनमेव च। सर्वज्ञं सर्वकर्तारमाचार्यं तु प्रणम्य च॥ शैशिरोऽहं प्रवक्ष्यामि शाखाया लक्षणं विधिम्।** शिक्षेयमाकारेऽष्टसप्तत्यधिकैकशतकारिकाशरीरत्वाद् बृहतीति मन्यते। स्वराणां स्थान-वर्ण-देवता-वर्ण-ऋषि-छन्दस्तत्त्वानामत्र समुचितं वर्णनमुपलभ्यते। अस्याः शिक्षाया अतिशयं साम्यमृक्प्रातिशाख्येनेति प्रसिद्धिः। ऋग्वेदाध्येतृभ्योऽस्या अध्ययनमतीव श्रेयस्करम्।

***शौनकशिक्षा*** - इयं शिक्षाऽपि ऋग्वेदेन सम्बद्धा। पाणिनीयाद्यन्यशिक्षाणां तत्त्वमधिगन्तुमपि शिक्षाया अस्या अध्ययनमुपयोगीति सङ्कीर्त्यते। अष्टाध्यायीसूत्रसङ्ख्यायाः (४/३/१०६) इत्यस्याः काशिकावृत्तौ ह्येतच्छिक्षोल्लेखोऽवाप्यते। प्रायशः सप्तषष्टिकारिकाभिर्युता शिक्षेयं सम्प्रति दक्षिणभारते सुप्रतिष्ठिता।
ऋग्वेदसम्बद्धास्वेतदतिरिक्तासु शिक्षासु स्वरव्यञ्जन-षोडशश्लोकीत्यादीनां परिगणनं विधीयते।

### *4.2 यजुर्वेदसम्बद्धाः शिक्षाः -*

यजुर्वेदो हि यतः शुक्लकृष्णरूपेण भिद्यते। तस्माच्च यजुर्वेदसम्बद्धानां कासाञ्चित् प्रसिद्धानां शिक्षाणामपि परिचय एतद्भेदपुरस्सरमेवात्र प्रस्तूयते।

*शुक्लयजुर्वेदसम्बद्धाः प्रसिद्धाः शिक्षाः* – शुक्लयजुर्वेदसम्बद्धाः हि शिक्षाग्रन्थाः प्रायशः सप्तविंशतिः अष्टाविंशतिर्वेति प्रसिद्धिः। तेषु शिक्षाग्रन्थेष्विह शिक्षाद्वयस्य परिचयः प्रदीयते -

*याज्ञवल्क्यशिक्षा* - शिक्षेयं स्वरवर्णाद्युच्चारणादिविषयाणां साङ्गोपाङ्गवर्णनकारणाद् अतीव प्रथिता। द्वात्रिंशदधिकद्विशतकारिकाभिरस्याः शिक्षायाः स्वरूपं बृहत् परं कारिकासङ्ख्याविषये वर्तते विसंवादः। यद्यपि निःसंशयं याज्ञवल्क्यप्रणीतत्वम् अस्याः शिक्षायाः - **एतत्सर्वं समाख्यातं याज्ञवल्क्येन धीमता॥ सर्वशास्त्ररहस्यं तद्याज्ञवल्क्येन भाषितम्।** इति वचनेन परिकीर्तितं भवति तथाऽप्येकत्र शिक्षाया अस्या रचनाकारः कश्चित् सोमशर्मेति प्रतीयते। तथोक्तम् अत्रैव -

**निमेषमात्रः कालः स्याद् विद्युत्कालस्तथा परे। अक्षरात् तुल्ययोगाच्च मतिः स्यात् सोमशर्म्मणः॥**

एवं सत्यप्यत्र विवदमानविषयत्वे सम्भवतीदं यत् कस्यचित् सोमशर्म्मणो मतमात्रमेव याज्ञवल्क्येन समुपस्थापितं स्यादिति।

*पाराशरीशिक्षा* – शुक्लयजुर्वेदस्य शिक्षास्वस्याः शिक्षाया महत्त्वपूर्णं स्थानमित्यङ्गीक्रियते। पुष्करतीर्थसदृशी ह्यस्याः प्रतिष्ठेत्यपि मन्यते। षष्ट्यधिकैकशतकारिकायुता शिक्षेयं सम्भवतः पाराशरमतस्य निरूपणकारणात् पाराशरीशिक्षारूपेण प्रसिद्धिमलभत इत्येवमनुमीयते। तथा ह्युक्तम् -

**याज्ञवल्की तु वासिष्ठी शिक्षा कात्यायनी तथा।**<br>
**पाराशरी गौतमी तु माण्डव्यामोधनन्दिनी॥**<br>
**पाणिन्या सर्ववेदेषु सर्वशास्त्रेषु गीयते।**<br>
**वाजसनेयशाखायां तत्र माध्यन्दिनी स्मृता॥** (पाराशरीशिक्षा ७७-७८)

उल्लेख्यमिदमप्यत्र यत् केवलं माध्यन्दिन्याख्या शिक्षैव वाजसनेयशाखया सम्बद्धेति प्रतिपादिताऽन्याश्च शिक्षाः सर्ववेदैः सर्वशास्त्रैश्च सम्बद्धाः प्रोक्ताः। कारिकाद्वयमत्र प्रक्षिप्तमिति सम्भाव्यते यतोऽन्यासां शिक्षाणां सर्ववेदसमन्वितत्वप्रतिपादनं तु समीचीनं परं स्वस्य नाम्नोऽपि तस्यामेव श्रेण्यां स्थापनं न युक्तियुक्तं प्रतीयते। सत्यप्येवं पाराशरीत्याख्यायाः शिक्षायाः महत्त्वम् अक्षुण्णमेव सन्तिष्ठते।

यजुर्वेदस्य शुक्लयजुर्वेदसम्बद्धासु शिक्षासु वासिष्ठी-कात्यायन्यादीनां शिक्षाणां ग्रहणं भवति।

*कृष्णयजुर्वेदसम्बद्धाः प्रसिद्धाः शिक्षाः* – कृष्णयजुर्वेदसम्बद्धाः हि शिक्षाग्रन्थाः प्रायशः २०-२१ वेति प्रोच्यते। तेषु शिक्षाग्रन्थेष्विह शिक्षाद्वयस्य परिचयः प्रदीयते –

*भारद्वाजशिक्षा* –कृष्णयजुर्वेदस्य तैत्तिरीयशाखासम्बद्धासु शिक्षासु भारद्वाजाख्यशिक्षायाः स्थानं प्राथम्येन परिगण्यते। भारद्वाजप्रणीतत्वञ्च शिक्षाया अस्या इति सुस्पष्टमेव। तथा हि-

**भारद्वाज-व्यास-शम्भु-पाणिनि-कौहलीयकम्। बोधायनो वशिष्ठश्च वाल्मीकिर्हारीतं नव॥**
**सर्वसम्मतारण्यं तथा सिद्धान्तमेव। उपशिक्षा इमाः प्रोक्ता लक्षणज्ञानकोविदैः॥**

शिक्षायामस्यां त्रिंशदधिकैकशतपरिमिताः कारिका उपलभ्यन्ते, यत्र तैत्तिरीयसंहितायाः सन्देहास्पदानां पदसम्बन्धिविषयाणां विवेचनमवाप्यते।

*व्यासशिक्षा* - तैत्तिरीयशाखासम्बद्धा शिक्षेयमपि, यस्याः प्रणेता व्यास इत्युच्यते। सम्भवतः शिक्षाकारो व्यासः प्राचीनाद् व्यासाद् भिन्न एव। अष्टाविंशतिप्रकरणैरन्विता शिक्षेयं यद्यपि कारिकाऽन्विता तथाऽपि पट्टाभिरामशास्त्रिविहितसंस्करणे पञ्चविंशत्यधिकपञ्चशतसूत्रैः समन्वितमस्याः स्वरूपं शिक्षाग्रन्थानां सूत्रवत्त्वमपि प्रतिपादयति।

कृष्णयजुर्वेदीयास्वेतदरिक्तान्यासु शिक्षासु चारायणी-सर्वसम्मतादीनां शिक्षाणां गणना जायते।

### *4.3 सामवेदसम्बद्धाः शिक्षाः -*

*गौतमीशिक्षा* - शिक्षाया अस्या मूलप्रवचनकर्ता गौतमर्षिः प्रोच्यते। संयोगतत्त्वस्य विशेषेण वर्णनाच्छिक्षाया अस्या अपरं नाम संयोगशृङ्खलेति प्रसिद्धम्। अत्र हि व्यञ्जनवर्णानामेव संयोगो विविक्तो न तु स्वरवर्णानाम्। **गौतमेनोक्तं न सप्ताक्षरात् परं संयोगो भवति**, इत्येतद्वचनेन सामवेदे सप्ताक्षरादधिकम् अर्थात् सप्तव्यञ्जनादधिकं संयोगो निषिध्यते। एवं वर्णानां द्वित्वादिकमाधृत्य संयोगप्रतिपादनप्रधाना शिक्षेयं प्रतिभाति, यत्र प्रपाठकद्वयसंयुतिः। प्रथमप्रपाठकं नवसङ्ख्याकैः खण्डैर्द्वितीयप्रपाठकञ्च षट्खण्डैरन्वितम् अवाप्यते। शिक्षेयं सूत्रात्मिकेति विशेषः।

*नारदीयशिक्षा* - सामवेदस्य शिक्षासु शिक्षाया अस्याः विशिष्टं महत्त्वम्। अस्याः नामान्तरं श्रव्यवेदाङ्गम् इति कथ्यते। यद्यपि प्रणेताऽस्याः शिक्षाया देवर्षिनारदः प्रोच्यते तथाऽप्येतच्छिक्षास्वरूपेण तदीयमतोद्धारकेतराचार्यकृतित्वम् एवास्याः स्पष्टीक्रियते। अत्रापि प्रपाठकद्वयम्, यत्र प्रथमप्रपाठकम् अष्टखण्डान्वितं द्वितीयमप्यष्टखण्डान्वितञ्च विद्यते। प्रायशः कारिकायुतायां शिक्षायामस्यां सप्तविंशत्यधिकद्विशतपरिमितसङ्ख्याकाः

कारिकाः सन्ति। षड्ज-गान्धार-पञ्चमादीनां गेयस्वराणां स्वरूपं तत्सम्बद्धविषयाश्च अत्र विवृता अवाप्यन्ते।

सामवेदीयास्वेतदरिक्तान्यासु शिक्षासु लोमश्यादीनां शिक्षाणां परिगणनं विधीयते।

### *4.4 अथर्ववेदसम्बद्धाः शिक्षाः–*

***माण्डूकीयशिक्षा*** - अथर्ववेदीयेषु शिक्षाग्रन्थेषु शिक्षायाः अस्या महत्त्वपूर्णं स्थानम्। शिक्षाऽऽख्यवेदाङ्गस्य सर्वे विषया एवात्र विवेचिताः अवाप्यन्ते। महर्षिमण्डूकविहिता शिक्षेयमिति प्रख्यापकं वचः इदम् - **शिक्षा प्रकल्पिता सम्यङ्माण्डूकेन महर्षिणा। शिष्याणामुपदेशार्थं सम्यगुच्चारणाय वै॥**

अथर्वेदीयेष्वेतदरिक्तशिक्षाग्रन्थेषु वर्णपटल-दन्त्योष्ठ्यविधीत्यादीनां ग्रन्थविशेषाणां नामान्युल्लेखयितुं शक्यन्ते।

### 5. सर्ववेदसाधारण्यः शिक्षाः –

एवमिह वेदानुसारिणीनां शिक्षाणां सङ्क्षेपतः परिचयः प्रदत्तः। वस्तुतो सर्ववेदसाधारण्यः काश्चन शिक्षाः विद्यन्ते यत्र सर्वेषां भिन्नभिन्ननियमादिशरीराणां सामान्यीकरणं विधाय शिक्षावेदाङ्गस्य स्वरूपं सर्वतः सर्वत्र चाङ्गीकृतं स्याद् इति धिया शिक्षातत्त्वानि वर्णितानि जातानि। तास्वेव शिक्षास्वापिशल्यादिशिक्षाः विशेषत उल्लेखार्हाः।

### *5.1 आपिशलिशिक्षा, कौण्डिन्यायनशिक्षा, पाणिनीयशिक्षा -*

यद्यप्यापिशलि-पाणिनीयादिशिक्षाः पूर्वोद्धृतेन *"याज्ञवल्की तु वासिष्ठी शिक्षा कात्यायनी तथा। पाराशरी गौतमी तु माण्डव्यामोधनन्दिनी॥ पाणिन्या सर्ववेदेषु सर्वशास्त्रेषु गीयते।वाजसनेयशाखायां तत्र माध्यन्दिनी स्मृता॥"* इति वचनेन ऋग्वेदादिभिः सम्बध्यन्ते तथाऽप्यासां शिक्षाणां स्वरूपं तत्रत्यवर्ण्यविषयाश्च यतः सर्ववेदसाधारणं शिक्षावपुरेव समुपस्थापयन्ति तस्माद् आसाम् आपिशलि-कौण्डिन्यायन-पाणिनीयादिशिक्षाणां परिगणनं सर्ववेदसाधारणीषु शिक्षासु विधीयते। इह तावत् सङ्क्षेपेणापिशलि-कौण्डिन्यायन-पाणिनीयशिक्षाणां परिचयः प्रस्तूयते।

***आपिशलिशिक्षा*** - इयं हि शिक्षा सूत्ररूपेणोपनिबद्धाऽवाप्यते। यद्यपि कुत्रचित् कारिकारूपेणाप्युपनिबद्धेयं कथ्यते। आपिशलिमुनेर्मतानुसारेण, शिक्षेयं प्रोच्यते,

इत्येवमुद्घोषणम् एतस्याः प्रथमकारिकायामेवम् अक्रियत तद्यथा - **अथ शिक्षां प्रवक्ष्यामि मतामापिशलेर्मुनेः।** अष्टाध्यायीकृता पाणिनिना तावद् आपिशलेर्नाम **वा सुप्यापिशलेः** (अष्टाध्यायीसूत्रसङ्ख्या - ६/१/९२) इत्यस्मिन् सूत्रे प्रस्तुत्य तम् आपिशलिमुनिं प्रत्यादरभावः प्रदर्शितोऽस्ति। काव्यमीमांसाकारो राजशेखरोऽपि "*शिक्षाऽऽपिशलीयादिका*" इति पूर्वोद्धृतवचनद्वारा शिक्षाग्रन्थेष्वस्याः शिक्षाया विशिष्टं स्थानं प्रदर्शितवान्। किमधिकम्, शौनकीयशिक्षायाः प्राचीनव्याख्यायाः प्रारम्भे तावद् **बह्व्यः सन्ति शिक्षाः शौनकीय-पाणिनीय-शैशिरीय-आपिशलीयाद्याः** इत्येतद्वचनप्रामाण्येनापि शिक्षाग्रन्थेष्वापिशलिशिक्षा चकास्ति। शिक्षायामस्याम् उपक्रम-स्थान-करण-अन्तःप्रयत्न-बाह्यप्रयत्न-स्थानपीडन-वृत्तिकार-प्रक्रम-प्रयत्नस्पष्टीकरण-उपसंहारनामभिर्दश प्रकरणानि विवृतानि वर्तन्ते। अन्यत्र त्वष्टौ खण्डा एव शिक्षाया अस्या इत्युल्लिख्यते। सम्भवतीदं यद् उपर्युक्तेषु दशप्रकरणेषु प्रकरणद्वयमत्रान्तर्निहितं जातं स्यादिति।

***कौण्डिन्यायनशिक्षा -*** इयं शिक्षा नवीना प्रतिभाति यतोऽत्र विगतपञ्चसहस्रवर्षेभ्यः शिक्षाविषये विहिता विचारा आसमन्ताच्चर्चिता अवाप्यन्ते। शिक्षाया अस्याः मूलग्रन्थस्य प्रारम्भे शिक्षापरिभाषा-शिक्षाप्रयोजनादिविषयाः सन्ति विचारितास्ततश्च वर्ण-स्वर-मात्रा-बल-साम-सन्तानानां निरूपणमवलोक्यते। अत्र प्रातिशाख्यादीनामपि शिक्षाग्रन्थत्वम् अथ च संहिताऽऽदिकार्येषु पाणिनि-कात्यायन-पतञ्जलिविहितानां कतिपयत्रुटीनामपि निदर्शनं कारितमस्ति। एवं नूतनतरायाः शिक्षाया अस्या विशेषमेव स्थानमिति स्पष्टम्।

***पाणिनीयशिक्षा -*** शिक्षाया अस्याः सम्बन्धः साधारणतः सर्वेभ्यो वेदेभ्योऽस्तीति कथयितुं शक्यते। वस्तुतो यथा पाणिनिव्याकरणं सम्प्रति व्याकरणमूलत्वं भजते तथैव शिक्षाग्रन्थेषु पाणिनिशिक्षाया अपि स्थानमिति कथने नैव काचनातिशयोक्तिः। अवश्यं प्राग् आपिशलिशिक्षाया एवाधिका प्रथितिः परं पश्चाद्वर्तिनि काले पाणिनिनामसंयुतायाः शिक्षाया अस्यास्ततोऽप्यधिकरूपेण स्वीकृतिः सञ्जातेत्यनुभूयते। यद्यपि शिक्षेयं पाणिनिनाम्नोऽन्वितत्वेन तदीयवर्णितसिद्धान्तयोगेन च संयुज्यैव प्रथिततरा दरीदृश्यते तथाऽपि पाणिनिपरम्परातः संयुतस्य कस्यचनाचार्यस्यैव कृतिरियं पाणिनीयशिक्षेति प्रतीयते। तथा ह्यत्रत्यवचनेनापि पाणिनीयमतमेव पुरः स्थाप्यते, इति निः संशयम् उल्लिख्यते - **अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा। शास्त्रानुपूर्वं तद् विद्याद् यथोक्तं लोकवेदयोः॥** अस्यां हि शिक्षायां षष्टिसङ्ख्याकाः कारिका अवाप्यन्ते। शिक्षाया अस्याः विशेषः परिचयः एतत्कर्तृविषयोल्लेखपुरस्सरम् अग्रे विविच्यते।

**6. पाणिनीयशिक्षायाः परिचयस्तदीयकर्ता च –**

शिक्षेयं साक्षाद् ऋग्वेदत एव सम्बद्धेति प्रायोवादः। पाश्चात्यविद्वद्भिः परं याजुषत्वमेवास्याः स्वीकृतम्, हरदत्तादिभिश्च सामवेदीयत्वम् अस्या निरूपितम्। परं पाणिनीयशिक्षाया अस्याः सर्ववेदसम्बद्धत्वमपि बहुधोररीभूतम्। एतदर्थं स्वयं पाणिनीयशिक्षावचनमिदं प्रमाणभूतम् - **ऋग्यजुःसामभिर्दग्धो वियोनिम् अधिगच्छति**(पाणिनीयशिक्षा, कारिकासङ्ख्या – ५४)। याज्ञवल्क्यशिक्षा-पाराशरीयशिक्षा-देवीभागवतमहापुराणादिवचांस्यपि चैतत्प्रमाणरूपेण शक्यन्ते समुपस्थापयितुम्। वस्तुतः सर्वत्रापिशलिशिक्षाया एव पूर्वत्र सम्प्रसारविषयत्वाद् अपि, पाणिनिव्याकरणपरम्परां भजमानेन लोकेनैतन्नाममहिमानम् आत्मसात्कृत्य पाणिनीयशिक्षाया अधिकं माहात्म्यञ्च अङ्गीकृत्य शिक्षेयं परां प्रसिद्धिमगात्। अपरमपि तथ्यम् एतस्याः शिक्षायाः प्रसिद्धिसम्बद्धं यदत्र सर्वसामान्याः शिक्षाविषयाः सरलीकृत्य सम्प्रस्तुताः। षष्टिसङ्ख्यात्मिकायां पाणिनीयशिक्षायाम् एकादशखण्डैः शिक्षाविषयाः सन्ति विवेचिता इति प्रोच्यते। परम् अन्यत्र, अस्याः खण्डसङ्ख्याविषये बहुधा मतान्तरम् अवाप्यते। यथा वीरमित्रोदयस्य परिभाषाप्रकाशे शिक्षेयं पञ्चखण्डात्मिका वर्ण्यते। यथोक्तं पूर्वत्रापि - **अथ शिक्षां प्रवक्ष्यामीत्यादिपञ्चखण्डात्मिका पाणिनिप्रोक्ता।** अथ च मधुसूदनसरस्वतीवर्येण शिवमहिम्नस्तोत्रस्य टीकायां नवखण्डात्मिका शिक्षा वस्तुतः पाणिनीयेति निरूपितम्। तत्रत्यञ्च वच इदम् - **सर्ववेदसाधारणी शिक्षा अथ शिक्षां प्रवक्ष्यामीत्यादिनवखण्डात्मिका पाणिनिना प्रकाशिता।** सत्स्वपि मतान्तरेषु पाणिनीयशिक्षा एतद्वचनाधारेण सुप्रतिष्ठितेति सुस्पष्टं ज्ञायते। अस्याः शिक्षायाः प्रसिद्ध्यनुगुणं टीका अपि काश्चन विलिखिता जाताः। तासु टीकासु त्रयोविंशतिकारिकाणां व्याख्यायुताऽज्ञातकर्तृका पञ्जिकाटीका, द्वात्रिंशत्कारिकाणां व्याख्याने प्रवृत्ता अज्ञातकर्तृका च शिक्षाप्रकाशटीका प्राचीनत्वाद् विशेषेणोल्लेखार्हत्वं भजेते। ततश्च नारायणदत्तत्रिपाठिविहिता प्रकाशाख्यटीका, कालीप्रसादमिश्रकृता प्रकाशिकाऽऽख्यटीका, रुद्रप्रतापावस्थिप्रणीता प्रदीपव्याख्या, गुरुप्रसादशास्त्रिरचिताऽभिनवराजलक्ष्मीटीका, अन्याश्च विविधभाषाऽन्विताः व्याख्याः पाणिनीयशिक्षाया अस्याः टीकासम्पदं विशेषयन्ति।

पाणिनीयशिक्षायाः कर्तृत्वविषयो विवदमान एव। यद्यपि व्याकरणानुगुणं पाणिनिना प्रोक्तं पाणिनीयम्, पाणिनिन इदम् इत्यादिव्युत्पत्तिपुरस्सरं पाणिनीयमित्येवं शब्दस्वरूपं साधयितुं शक्यते तथाऽपि न शिक्षयाऽनया प्रसिद्धो वैयाकरणः पाणिनिः साक्षाद् अन्वितोऽपितु तदीयसिद्धान्तादीनां प्रयोगविषयत्वात् पाणिनीयव्याकरणपरम्परायाः एव

कस्यचिद् आचार्यस्य शिक्षासम्बद्धा विचारसङ्ग्रहरूपा शिक्षेयमिति स्पष्टतो वक्तुं शक्यते। तथा ह्यादरेण सुप्रसिद्धः पाणिनिराचार्योऽस्याः शिक्षायाः सङ्ग्रहकृता नमस्कृतो वर्ण्यते - **येनाक्षरसमाम्नायमधिगम्यमहेश्वरात्। कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः॥** अवश्यमेतत्पक्षविरोधे महेश्वरात् समाम्नायाधिगमनम् अथ च **शङ्करः शाङ्करीं प्रादाद् दाक्षीपुत्राय धीमते। वाङ्मयेभ्यः समाहृत्य देवीं वाचमिति स्थितिः॥** इत्येतद्वचनद्वयेन शिक्षाया अस्याः सम्बन्धः केवलं प्रथित्यभीप्सया, शङ्करेण प्रसिद्धवैयाकरणेन पाणिनिना च सह प्रयोक्तुं प्रक्षेपितः स्याद् इति कथनं नानर्गलम् इति कथयितुं शक्यते तथाऽपि सर्वत्र महर्षिपाणिनिविहिताः कृतयः का इति विजिज्ञासायाम् अष्टाध्यायी-लिङ्गानुशासन-जाम्बवतीविजयादीनां ग्रन्थानामुल्लेखो विना विवादेन झटिति जायते न परं पाणिनीयशिक्षायाः कर्तृत्वविषयोऽनेन प्रसिद्धेन पाणिनिनाऽऽचार्येण संयुतो लक्ष्यते। ईदृशो व्यवहारस्तावद् अवश्यं पाणिनीयशिक्षायाः कर्ता कश्चन पाणिनिपरम्पराऽनुगामी एवाचार्यो न हि प्रसिद्धः पाणिनिरित्यापततः प्रतिपादयति। शिक्षाया अस्याः - **कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः॥** (पाणिनीयशिक्षा, कारिकासङ्ख्या - ५७) इत्येतद्वचनमपि पाणिन्यतिरिक्तस्यैव कस्यचनैतच्छिक्षाकारत्वं स्पष्टयति। तस्मात् पाणिनेराचार्यस्य कनिष्ठभ्रात्रा पिङ्गलाचार्येण शिक्षेयं तन्नाम योजयित्वा विरचिता स्यादित्यपि सम्भाव्यते। तथोक्तम् - **व्याख्याय पिङ्गलाचार्यसूत्राण्यादौ यथायथम्। शिक्षां तदीयां व्याख्यास्ये पाणिनीयानुसारिणीम्॥** एवं पाणिनिशिक्षायाः कर्ता न हि बहुस्पष्ट इति प्रतिपाद्यते।

### 7. शिक्षाग्रन्थेषु पाणिनीयशिक्षास्थानम् –

ऋगादिवेदान् समाधृत्य सन्ति नैके शिक्षाग्रन्थाः। परं तासां तासां शिक्षाणां स्ववेदेन तद्वेदशाखयैव संयुतिकारणात् सीमाङ्कनं जातम्, तस्माच्चेमाः शिक्षाः स्ववेद-शाखाऽतिरिक्तं न तथा प्रसिद्धिम् अलभन्त। एवम् एतासां शिक्षाणां पश्चाद्वर्तिनि काले समग्रवेदशाखाद्यध्ययनह्रासत्वात् तथाभूतानां शिक्षाणां सम्प्रसारोऽभिकल्पितो यत्र समग्रोऽपि शिक्षाविषयः साङ्गोपाङ्गरूपेण वर्णितः स्यात्। ईदृशापेक्षानुगुणम् आपिशल्यादिशिक्षाणां सर्वत्र स्वीकृतिः सम्प्रसरिताऽभूद् इति निर्णेतुं शक्यते। ततश्च पाणिनीयशिक्षाया नाममहिमानं स्वीकृत्य तत्रत्यवर्णितशिक्षाविषयस्य साररूपेण समुपस्थापनञ्चात्मसात्कृत्य लोके पाणिनीयशिक्षाया अधिकं सम्प्रसारोऽभिलक्ष्यते। अवश्यं लोकेन सम्बद्धताऽपि स्वयमत्रत्यवचनेनैव ज्ञायते। यथोक्तम् अत्र - **शास्त्रानुपूर्वं तद् विद्याद् यथोक्तं लोकवेदयोः**, इति। तथा हि शिक्षावेदाङ्गस्य प्रयोजनातिशयत्वमेतेन पाणिनीयशिक्षावचसा ज्ञायते यत्रोदात्तादिस्वरवर्णव्यतिरिक्तमुच्चारणं वैपरीत्येन फलवदभूदिति निर्दिष्टम्। तथा हि -

**मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह।**

**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥**

(पाणिनीया-शिक्षा, कारिकासङ्ख्या-52)

तस्मादेव दुष्टोच्चारणं वेदस्य न कर्तव्यं यतो विविधा अनर्था वज्रपाततुल्या एवेति **अक्षता शस्त्ररूपेण वज्रं पतति मस्तके** इत्यादिना सङ्केतितमवाप्यतेऽत्रैव। एवं शिक्षावेदाङ्गस्य मूलप्रयोजनविषयोऽत्र प्रोक्तः, यस्याधारः समुचितस्वरवर्णाद्युच्चारणज्ञानान्वयनमिति स्पष्टीभवति। ईदृशैरेव विविधवचनैः पाणिनीयशिक्षाया माहात्म्यं बहुधाऽत्र वर्णितम्। तथा हि "येनाक्षरसमाम्नायमधिगम्यमहेश्वरात्", "शङ्करः शाङ्करीं प्रादाद् दाक्षीपुत्राय धीमते" अथ च **त्रिनयनमुखनिस्सृतामिमां य इह पठेत् प्रयतः सदा द्विजः। स भवति धनधान्यकीर्तिमान् सुखमतुलं च समश्नुते दिवि** (पाणिनीयशिक्षा, कारिकासङ्ख्या - ६०) इत्यादिभिः पाणिनीयशिक्षाया माहात्म्यावलोकनं सुस्पष्टम्।

## 8. पाणिनीयशिक्षायां वर्णितविषयाः -

पाणिनीयशिक्षा षष्टिसङ्ख्याकाभिः कारिकाभिरन्वितेति सुप्रथितमेव। तत्र च प्रथमं कारिकाद्वयं शिक्षाया अस्याः पाणिनीयमतानुसारित्वं लोकवेदोपकारकत्वं च रूपं दर्शयति। अत्रत्यतृतीयकारिकया वर्णसङ्ख्या प्राकृतसंस्कृतभाषाऽनुसारेण त्रिषष्टिः चतुष्षष्टिर्वा सम्भाविता। चतुर्थ्यां पञ्चम्यां च कारिकायां वर्णानां परिगणनमुल्लिख्यते। ततो दशसङ्ख्याककारिकापर्यन्तं वर्णोत्पत्तिप्रक्रिया वर्णभेदकारणगणना च विवेचनीयतां गते। एकादश्याञ्च कारिकायां स्वर-कालकृतवर्णभेदस्वरूपं वर्णितञ्जातम्। द्वादश्यां कारिकायां पाठस्वरविषयस्त्रयोदश्याञ्च वर्णस्थानगणनाविषयः, चतुर्दश्याम् ऊष्मगतिभेदविषयः, अथ च पञ्चदश्यां कारिकायामूष्मगतिविशेषविवेको वर्णितो दृश्यते। षोडशतोऽष्टादशकारिकापर्यन्तं वर्णानां स्थाननिरूपणं विविक्तम् अस्ति। आचार्यः ऊनविंशतिकारिकायाम् ए-ओ-ऐ-औ-इत्येषां विशिष्टस्वराणां विचारं समुपस्थापयति। विंशत्येकविंशतिकारिकाभ्यां संवृतविवृतवर्णविशेषविचारः प्रस्तूयते। अनुस्वार-यम-अयोगवाहस्थाननिरूपणञ्च द्वाविंशतिसङ्ख्याकया कारिकया विहितम्। अग्रिमयोर्द्विकारिकयोरनुस्वारस्वरूपादिकं विवृतञ्जातम्। वर्णोच्चारणकौशलस्य निरूपणं ततः पञ्चविंशतिकारिकायामुल्लिखितमवाप्यते। इतोऽग्रे विशिष्टस्य रङ्गाख्यस्य वर्णस्योच्चारणविषयश्चतसृषु कारिकासूपनिबद्धो वर्तते। कम्पस्वरोच्चारणवैशिष्ट्यम्, वर्णोच्चारणकौशलमाहात्म्यम्, अधमपाठकलक्षणम्, पाठकगुणलक्षणञ्च त्रिंशत्कारिकात आरभ्य त्रयस्त्रिंशत्कारिकापर्यन्तं सूपपादितं दृश्यते। पाठप्रकारविशेषाणां निषेधस्तावद् अग्रिमयोः द्वयोः कारिकयोः अथ च श्रौतसोमयागेषु त्रिषु सवनेषु वाचः स्थानविशेषाणां प्रयोगस्य प्रकारा इतोऽग्रिमयोः कारिकयोरर्थात् षट्त्रिंशत्-सप्तत्रिंशत्सङ्ख्याकयोः

कारिकयोर्वर्णिता जाताः। आस्यप्रयत्ना अर्थाद् आभ्यन्तरप्रयत्ना अष्टत्रिंशत्कारिकायाम्, अनुप्रदानान्यर्थाद् बाह्यप्रयत्ना ऊनचत्वारिंशच्चत्वारिंशत्सङ्ख्याकयोः कारिकयोः सन्ति विवृता जाताः। ततोऽग्रेस्थाभ्यां कारिकाभ्यां वेदपुरुषाङ्गपरिचयः साङ्गवेदाध्ययनमाहात्म्यञ्च वर्णिते जाते। हस्तकार्यस्वरनिर्देशप्रकारविषयस्तावत् त्रिचत्वारिंशच्चतुश्चत्वारिंशदष्टचत्वारिंशत्कारिकाभिः विवृतः प्राप्यते। उदातादिस्वरमूलकपदप्रस्तारः पञ्चचत्वारिंशत्सङ्ख्याकायां कारिकायाम् अथ च स्वरप्रस्तारोदाहरणविषयः षट्चत्वारिंशत्सप्तचत्वारिंशत्सङ्ख्याकयोः कारिकयोरुपनिबद्धः। मात्राविशेषनिदर्शनम् ऊनपञ्चाशत्कारिकायाम्, अग्रिमयोः कारिकयोश्चासद्गुरुनिन्दा-सद्गुरुप्रशंसाविषयश्चोल्लिखितः प्राप्यते। स्वरवर्णादि-विकलोच्चारणे हानिरिति विषयो द्विपञ्चाशत्-त्रिपञ्चाशत्कारिकाद्वारा हस्तस्वरनिर्देशस्या-वश्यकतानिरूपणविषयश्चाग्रिमाभ्यां कारिकाभ्यां सम्पाद्यते। अतः परं शिक्षाशास्त्रगुरुपरम्परां पाणिनिगौरवञ्चादाय ऊनषष्टिकारिकापर्यन्तं विवृतिः। अन्तिमायां षष्टिसङ्ख्याकायाञ्च कारिकायां पाणिनीयशिक्षापठनाधिकारिमाहात्म्यादिवर्णन-मुल्लिखितमवाप्यते। एवं षष्टिकारिकापर्यन्तं पाणिनीयशिक्षास्थानां विविधानां विषयाणां वर्णनमत्र समुपस्थापितम्।

**9. विषयसङ्ग्रहः–**

शिक्षाऽऽख्यवेदाङ्गं हि स्वाङ्गिनं वेदरूपशरीरमुपकरोति। तस्माच्च षट्-सङ्ख्याकेषु वेदाङ्गेषु शिक्षावेदाङ्गस्य वर्तते विशिष्टं माहात्म्यम्। स्वर-वर्ण-साम-सन्तानाभिधानां शिक्षातत्त्वानां ज्ञानेन वेदस्य समुचितार्थस्वरूपं सुनिर्धारितं भवति। वेदाङ्गस्यास्य स्वरूपं प्रतिवेदं कथञ्चिद् भिन्नमित्यस्मात् कारणादेव वेदशाखादिपरम्पराऽनुसारेण शिक्षाः सन्ति नैकाः। सर्ववेदसमन्विता अपि शिक्षा उपलभ्यन्ते याः कथञ्चिद्रूपेण लोकतोऽपि सन्ति सम्पृक्ताः। एतास्वेव शिक्षासु पाणिनीयशिक्षाया नामग्राहं वैशिष्ट्यं परिलक्षितं जायते। यद्यपि प्रसिद्धो वैयाकरणः पाणिनिर्नह्यस्याः शिक्षायाः प्रणेतृत्वेनोल्लेखयितुं शक्यस्तथाऽपि तत्परम्पराऽऽगताचार्येण केनचिच्छिक्षास्वरूपमिदं प्राकाश्यं नीतमिति प्रतिभाति। आपिशलिशिक्षातः शिक्षाया अस्याः विषयसाम्यं प्रथितिप्रतिस्पर्धित्वञ्च दृष्टिपथमायाति परं साम्प्रतं शिक्षाग्रन्थानाम् अध्ययनाध्यापनपरम्परायां पाणिनीयशिक्षाया एव सर्वत्र सम्प्रसार इति नूनमेव शक्यते वक्तुम्।